# अन्धककृत पार्वती स्तोत्रम्

अथान्धको महेश्वरीं ददर्श देवपार्श्वगाम् ।
पपात दण्डवत्क्षितौ ननाम पादपद्मयोः ॥

अन्धकोवाच ।
नमामि देववल्लभामनादिमद्रिजामिमाम् ।
यतः प्रधानपूरुषौ निहन्ति याऽखिलं जगत् ॥ १॥

विभाति या शिवासने शिवेन साकमव्यया
हिरण्मयेऽतिनिर्मले नमामि तां हिमाद्रिजाम् ।
यदन्तराखिलं जगज्जगन्ति यान्ति सङ्क्षयं
नमामि यत्र तामुमामशेषभेदवर्जिताम् ॥ २॥

न जायते न हीयते न वर्द्धते च तामुमां
नमामि या गुणातिगां गिरीशपुत्रिकामिमाम् ।
क्षमस्व देवि शैलजे कृतं मया विमोहितं
सुरासुरैर्नमस्कृतं नमामि ते पदाम्बुजम् ॥ ३॥

इत्थं भगवती गौरी भक्तिनम्रेण पार्वती ।
संस्तुता दैत्यपतिना पुत्रत्वे जगृहेऽन्धकम् ॥ ४॥

इति कूर्मपुराणे पूर्वभागे षोडशाध्यायान्तर्गतं
अन्धककृतं पार्वतीस्तोत्रं समाप्तम् ।